२१$\frac{१८}{६२}$ इत्युपपन्नम् अभिवर्द्धितसंवत्सरस्य यथोक्तं परिमाणं त्र्यशीत्यधिकानि त्रीणि शतानि रात्रिन्दिवानाम्, एकविंशतिर्मुहूर्त्ताः एकस्य च मुहूर्त्तस्य अष्टादश द्वाषष्टिभागा इति । अथ मुहूर्त्तसम्बन्धिप्रश्नसूत्रमाह–'ता से णं केवइए मुहुत्तग्गेणं आहिएत्ति वएज्जा ?' तावत् सः खलु कियता मुहूर्त्ताग्रेण आख्यात इति वदेत् ।।–तावदिति प्राग्वत् सः–प्रथमोदितोऽभिवर्द्धिताख्यः संवत्सरः खलु कियता मुहूर्त्ताग्रेण–मुहूर्त्तपरिमाणेन आख्यातः–प्रतिपादित इति वदेत्–कथय भगवन्निति गौतमस्य प्रश्नस्ततो भगवानाह–'ता एक्कारस मुहुत्तसहस्साइं पंच य एक्कारस मुहुत्तसए अट्ठारस बावट्ठिभागा मुहुत्तस्स मुहुत्तग्गेणं आहिएत्ति वएज्जा' तावदेकादशमुहूर्त्तसहस्राणि पंच च एकादशमुहूर्त्तशतानि अष्टादश द्वाषष्टिभागा मुहूर्त्तस्य मुहूर्त्ताग्रेण आख्यात इति वदेत् ।। तावदिति पूर्ववत् तस्याभिवर्द्धिताख्य सम्वत्सरस्य मुहूर्त्तपरिमाणं खलु एकादश मुहूर्त्तसहस्राणि, पञ्चैकादशमुहूर्त्तशतानि–एकादशाधिकपञ्चशतानि मुहूर्त्तानामर्थात् ११५११ एकादशाधिकपञ्चशतोत्तराणि एकादशसहस्राणि मुहूर्त्तानाम् एकस्य च मुहूर्त्तस्याष्टादश द्वाषष्टिभागाश्चेति ११५११ + $\frac{१८}{६२}$ एतत्तुल्यं मुहूर्त्तपरिमाणं भवति एकस्मिन्न-

संवत्सर का यथोक्त परिमाण तीन सो तिरासी अहोरात्र तथा इक्कीस मुहूर्त एवं एक मुहूर्त का बासठिया अठारह भाग हो जाता है । अब श्री गौतमस्वामी मुहूर्त के विषय में प्रश्न करते हैं–(ता से णं केवइए मुहुत्तग्गेणं आहिएत्ति वएज्जा) यह पूर्वोक्त अभिवर्धितसंवत्सर कितने मुहूर्तपरिमाण वाला प्रतिपादित किया है ? सो हे भगवन् आप कहिये इस प्रकार श्री गौतमस्वामी के पूछने से उत्तर में श्री भगवान् कहते हैं–(ता एक्कारसमुहुत्तसहस्साइं पंच य एक्कारस मुहुत्तसए अट्ठारस बावट्ठिभागा मुहुत्तस्स मुहुत्तग्गेणं आहिएत्ति वएज्जा) उस अभिवर्द्धितसंवत्सर का मुहूर्त परिमाण ग्यारह हजार पांच सो ग्यारह ११५११ मुहूर्त तथा एक मुहूर्त का बासठिया अठारह भाग ११५११ + $\frac{१८}{६२}$ इतना मुहूर्तपरिमाण एक अभिवर्धितसंवत्सर का होता है ।

અંકન્યાસ આ પ્રમાણે છે–૩૮૩।૨૧ $\frac{१८}{६२}$। આરીતે અભિવર્ધિત સંવત્સરનું યથોક્ત પરિમાણ ત્રણસો ત્યાશી અહોરાત્ર તથા એકવીસ મુહૂર્ત અને એક મુહૂર્તના બાસઠિયા અઢાર ભાગ થઈ જાય છે.

હવે શ્રી ગૌતમસ્વામી મુહૂર્તનાં સંબંધમાં પ્રશ્ન પૂછે છે–(ता सेणं केवइए मुहुत्तग्गेणं आहिएत्तिवएज्जा) આ પૂર્વોક્ત અભિવર્ધિતસંવત્સર કેટલા મુહૂર્તપરિમાણ વાળું પ્રતિપાદિત કરેલ છે? તે હે ભગવાન્ આપ કહો આ પ્રમાણે શ્રી ગૌતમસ્વામીના પૂછવાથી શ્રી ભગવાન્ કહે છે–(ता एक्कारसमुहुत्तसहस्साइं पंच य एक्कारसमुहुत्तसए बावट्ठिभागा मुहुत्तस्स मुहुत्तग्गेण आहिएत्ति वएज्जा) એ અભિવર્ધિતસંવત્સરનું મુહૂર્તપરિમાણ અગીયાર હજાર પાંચસો અગ્યાર ૧૧૫૧૧। મુહૂર્ત તથા એક મુહૂર્તના બાસઠિયા અઢાર ભાગ ૧૧૫૧૧+$\frac{१८}{६२}$ આટલું મુહૂર્ત પરિમાણ એક અભિવર્ધિત સંવત્સરનું થાય છે. ભગવાન્ શ્રી

भिवर्द्धिताख्ये सम्वत्सरे इति भगवतोक्तमुत्तरं संवर्द्धयामि गणितेन यथा-एकस्मिन्न-भिवर्द्धिताख्ये मासे मुहूर्तपरिमाणम् ९५९ + $\frac{१७}{६२}$ एकोनषष्ट्यधिकानि नवशतानि मुहूर्त्ताना मेकस्य च मुहूर्त्तस्य सप्तदश द्वाषष्टिभागा इति पूर्वमत्रैव प्रतिपादितं भावितं चेति ॥ तत एकस्मिन् मासे एतावन्तः सावयवा मुहूर्त्ता लभ्यन्ते तदा द्वादशमासात्मकस्याभिवर्द्धित-संवत्सरस्य द्वादभिर्मासैः कियन्तः सावयवा मुहूर्त्ताः स्युरिति त्रैराशिकानुपातेन यथोक्ता मुहूर्त्ता द्वादशभिर्गुणनीयाः-(९५९+$\frac{१७}{६२}$) + १२=११५०८ + $\frac{२०४}{६२}$ = ११५०८ + ३$\frac{१८}{६२}$ = ११५११ + $\frac{१८}{६२}$ एकोनषष्ट्यधिकानि नवशतानि द्वादशभिर्गुणितानि जातानि एकादश सहस्राणि अष्टोत्तराणि पञ्चशतानि मुहूर्त्तानाम् । सप्तदश द्वाषष्टिभागाश्च द्वादशभिर्गुणिताः सन्तश्चतुरुत्तरे द्वे शते जाते, ते च द्वाषष्ट्या भागे हृते लब्धास्त्रयो मुहूर्त्तास्ते च मुहूर्त्तस्थाने योज्यास्तदा जातानि एकादश सहस्राणि एकादशोत्तराणि पञ्चशतानि मुहूर्त्तानाम्, अव-शिष्टाः शेषाश्च तिष्ठन्ति अष्टादश द्वाषष्टिभागास्तेनोपपद्यते-११५११$\frac{१८}{६२}$ अभिवर्द्धितसंव-

भगवान् के इस उत्तरवाक्य कथन को गणित प्रक्रिया से समर्थित करते हैं, जैसे की एक अभिवर्धित मास का मुहूर्तपरिमाण ९५९+$\frac{१७}{६२}$ नव सो उनसठ मुहूर्त तथा एक मुहूर्त का बासठिया सत्रह भाग होते हैं-यह पहले इसी सूत्र में प्रतिपादित किया है-तो एक मास में इतने सावयव मुहूर्त होते हैं तो बारह मास वाले अभिवर्द्धित संवत्सर के बारह मास का कितना सावयव मुहूर्तपरिमाण होता है ? इसको जानने के लिये त्रैराशिक पद्धति से उक्त मुहूर्त संख्या को बारह से गुणा करे (९५९+$\frac{१७}{६२}$)+१२=११५०८+$\frac{२०४}{६२}$=११५०८+ ३$\frac{१८}{६२}$=११५११+$\frac{१८}{६२}$ नव सो उनसठ को बारह से गुणा करने से ग्यारह हजार पांच सो आठ मुहूर्त होता है तथा बासठिया सत्रह भाग को बारह से गुणा करने से दो सो चार होते हैं, उसका बासठ से भाग करने से तीन मुहूर्त लब्ध होता है, उसको मुहूर्त संख्या के साथ योजित करने से ग्यारह हजार

ના ઉત્તરવાક્યકથનને ગણિતપ્રક્રિયાથી સમર્થિત કરે છે-જેમ કે-એક અભિવર્ધિત માસનું મુહૂર્ત પરિમાણ ૯૫૯+$\frac{૧૭}{૬૨}$ નવસો ઓગણસાઠ મુહૂર્ત તથા એક મુહૂર્તના બાસઠિયા સત્તરભાગ થાય છે. એ પહેલાં આજ સૂત્રમાં પ્રતિપાદિત કરેલ છે. તો જો એક માસમાં આટલા સાવયવ મુહૂર્ત થાય તો બારમાસ વાળા અભિવર્ધિત સંવત્સરના બાર માસના કેટલા સાવયવ મુહૂર્ત પરિમાણ થાય છે, તે જાણવા માટે ત્રૈરાશિક પદ્ધતિથી કહેલ મુહૂર્ત સંખ્યાનો બારથી ગુણાકાર કરવો જેમકે (૯૫૯+$\frac{૧૭}{૬૨}$)+૧૨=૧૧૫૦૮+$\frac{૨૦૪}{૬૨}$=૧૧૫૦૮ +૩$\frac{૧૮}{૬૨}$==૧૧૫૧૧+$\frac{૧૮}{૬૨}$ નવસો ઓગણસાઠ ને બારથી ગુણવાથી અગ્યારહજાર પાંચસો આઠ મુહૂર્ત થઈ જાય છે. તથા બાસઠિયા સત્તર ભાગનો બારથી ગુણાકાર કરવાથી બસોચાર થાય છે. તેનો બાસઠથી ભાગ કરવાથી ત્રણ મુહૂર્ત આવે છે. તેને મુહૂર્ત સંખ્યાની સાથે મેળવવાથી અગ્યાર હજાર પાંચસો અગ્યાર મુહૂર્ત થાય છે. તથા

त्सरस्य परिमाणमेकादशसहस्राणि पञ्चशतानि एकादशोत्तराणि मुहूर्त्तानाम् एकस्य च मुहूर्त्तस्याष्टादशद्वाषष्टिभागा इत्युक्तं मूलसूत्रे-'एक्कारसमुहुत्तसहस्साइं पंच य एक्कारसमुहुत्तसए अट्ठारस बावट्ठिभागे मुहुत्तस्स मुहुत्तग्गेणं आहिएत्ति वएज्जा' इति ॥-अथवा अन्यथा मुहूर्त्तपरिमाणमुच्यते-यतोहि अभिवर्द्धितसंवत्सरस्य परिमाणं खलु त्रीण्यहोरात्रशतानि त्र्यशीत्यधिकानि ३८३ अहोरात्राणाम्, एकविंशतिर्मुहूर्त्ताः २१, एकस्य च मुहूर्त्तस्य अष्टादश द्वाषष्टिभागाश्चेति=३८३ ।=२१ । $\frac{18}{62}$ अत्रैकस्मिन् रात्रिन्दिवे त्रिंशन्मुहूर्त्ता इति त्रीण्यहोरात्रशतानि त्र्यशीत्यधिकानि त्रिंशता गुण्यन्ते-३८३+३०=११४९० जातानि एकादश सहस्राणि चत्वारि शतानि नवत्यधिकानि । अत्रैकविंशतिर्मुहूर्त्ताः प्रक्षिप्यन्ते ११४९०+२१=११५११ जातानि एकादश सहस्राणि पञ्चशतानि एकादशोत्तराणि मुहूर्त्ताना मेकस्य

पांच सो ग्यारह मुहूर्त होते हैं तथा अवशिष्ट बासठिया अठारह भाग शेष रहता है अतः अभिवर्धितसंवत्सर का मुहूर्तपरिमाण ११५११$\frac{18}{62}$ ग्यारह हजार पांच सो ग्यारह मुहूर्त तथा एक मुहूर्त का बासठिया अठारह भाग मूलोक्त प्रमाण हो जाते हैं। मूल में कहा भी है-(एक्कारसमुहुत्तसहस्साइं पंच य एक्कारसमुहुत्तसए अट्ठारस बावट्ठिभागे मुहुत्तस्स मुहुत्तग्गेणं आहिएत्ति वएज्जा) अथवा अन्य प्रकार से मुहूर्तपरिमाण कहा जाता है-जैसे कि अभिवर्द्धितसंवत्सर का परिमाण तीन सो तिरासी अहोरात्र तथा इकीस मुहूर्त २१, तथा एक मुहूर्त का बासठिया अठारह भाग ३८३ । २१ । $\frac{18}{62}$ होते हैं। यहां पर एक अहोरात्र में तीस मुहूर्त होते हैं तो तीन सो तिरासी अहोरात्र को तीस से गुणा करे-३८३+३०=११४९० तो इस प्रकार ग्यारह हजार चार सो नव्वे होते हैं। इनमें इक्कीस मुहूर्त का प्रक्षेप करे तो ११४९०+२१=११५११ ग्यारह हजार पांच सो ग्यारह मुहूर्त तथा एक मुहूर्त का बासठिया अठारह

બાકી રહેલ બાસઠિયા અઢાર ભાગ શેષ રહે છે. તેથી અભિવર્ધિત સંવત્સરનું મુહૂર્ત પરિમાણ ૧૧૫૧૧$\frac{18}{62}$ અગ્યાર હજાર પાંચસો અગ્યાર મુહૂર્ત થાય છે. તથા એક મુહૂર્તના બાસઠિયા અઢાર ભાગ મૂળમાં કહેલ પ્રમાણ થઈ જાય છે. મૂળમાં કહ્યું પણ છે-(एक्कारस मुहुत्तसहस्साइं पंचय एक्कारस मुहुत्तसए अट्ठारसबावट्ठिभागे मुहुत्तस्स मुहुत्तग्गेणं आहिएत्ति वएज्जा) અથવા બીજી રીતે મુહૂર્ત પરિમાણ કહેવામાં આવે છે. જેમકે અભિવર્ધિત સંવત્સરનું પરિમાણ ત્રણસો ત્યાશી અહોરાત્ર તથા એકવીસ મુહૂર્ત ૨૧ તથા એક મુહૂર્તના બાસઠિયા અઢાર ભાગ ૩૮૩।૨૧।$\frac{18}{62}$ થાય છે. અહીં એક અહોરાત્રમાં ત્રીસ મુહૂર્ત થાય તો ત્રણસો ત્યાશી અહોરાત્રને ત્રીસથી ગુણાકાર કરવો=૩૮૩+૩૦=૧૧૪૯૦ તો આ રીતે અગ્યારહજાર ચારસો નેવું થાય છે. તેમાં એકવીસ મુહૂર્ત ઉમેરે તો ૧૧૪૯૦+૨૧=૧૧૫૧૧। અગ્યાર હજાર પાંચસો અગ્યાર મુહૂર્ત તથા એક મુહૂર્તના બાસઠિયા અઢાર ભાગ આટલા પ્રમાણવાળા મુહૂર્ત પરિમાણથી અભિવર્ધિત સંવત્સર

च मुहूर्त्तस्याष्टादश द्वाषष्टिभागाश्चेत्येवं प्रमाणेन मुहूर्त्ताग्रेण एकोऽभिवर्द्धिताख्यः सम्वत्सरः प्रपूर्णो भवतीति यथोक्तमुपपद्यते ॥ इत्येवं पञ्च संवत्सराणां परिमाणं ज्ञातमिति ॥सू० ७२॥

एकत्र मिलिता एते पञ्चसंवत्सरा यावत्प्रमाणा रात्रिन्दिवपरिमाणेन भवन्ति तावतो निर्दिदिक्षुः प्रथमतः प्रश्नसूत्रमाह--'ता केवइयं' इत्यादि ॥

मूलम्--ता केवइयं ते नो जुगे राइंदियग्गेणं आहिएत्ति वएज्जा ? ता सत्तरसएकाणउते राइंदियसए एकूणवीसं च मुहुत्तं च सत्तावण्णे बावट्ठिभागे मुहुत्तस्स बावट्ठिभागं च सत्तट्ठिहा छेत्ता पणपण्णं चुण्णिया भागे राइंदियग्गेणं आहिएत्ति वएज्जा ? ता से णं केवइए मुहुत्तग्गेणं आहिएत्ति वएज्जा ?, ता तेपण्णमुहुत्तसहस्साइं सत्त य ऊणापण्णे मुहुत्तसए सत्तावण्णं बावट्ठिभागे मुहुत्तस्स बावट्ठिभागं च सत्तट्ठिहा छेत्ता पणपण्णं चुण्णिया भागा मुहुत्तग्गेणं आहिएत्ति वएज्जा, ता केवइएणं ते जुगप्पत्ते राइंदियग्गेणं आहिएत्ति वएज्जा ?, ता अट्ठतीसं राइंदियाइं दस य मुहुत्ता चत्तारि य बावट्ठिभागे मुहुत्तस्स बावट्ठिभागं च सत्तट्ठिहा छेत्ता दुवालसचुण्णियाभागे राइंदियग्गेणं आहिएत्ति वएज्जा, । ता से णं केवइए मुहुत्तग्गेणं आहिएत्ति वएज्जा ?, ता एक्कारस पण्णासमुहुत्तसए चत्तारि य बावट्ठिभागे मुहुत्तस्स बावट्ठिभागं च सत्तट्ठिहा छेत्ता दुवालस चुण्णियाभागे मुहुत्तग्गेणं आहिएत्ति वएज्जा । ता केवइयं जुगे राइंदियग्गेणं आहिएत्ति वएज्जा ?, ता अट्ठारसतीसे राइंदियसए राइंदियग्गेणं आहिएत्ति वएज्जा, ता से णं केवइए मुहुत्तग्गेणं आहिएत्ति वएज्जा ?, ता चउपण्णं मुहुत्तसयाइं मुहुत्तग्गेणं आहिएत्ति वएज्जा, ता से णं केवइए बावट्ठिभागमुहुत्तग्गेणं आहिएत्ति

---

भाग इतने प्रमाण वाले मुहूर्तपरिमाण से अभिवर्धितसंवत्सर यथोक्त परिमाण से परिपूर्ण होता है। इस प्रकार पांचों संवत्सरों का परिमाण कहा गया है ॥ सू० ७२ ॥

---

યથોક્ત પરિમાણથી પરિપૂર્ણ થાય છે. આ રીતે પાંચે સંવત્સરોનું પરિમાણ કહેવામાં આવેલ છે. ।।સૂ. ૭૨।।

वएज्जा ? ता चउत्तीसं सयसहस्साइं अट्ठतीसं च बावट्ठिभागमुहुत्तसए बावट्ठिभागमुहुत्तग्गेणं आहिएत्ति वएज्जा, ॥सू० ७३॥

छाया–तावत् कियत् ते नो युगं रात्रिन्दिवाग्रेण आख्यातमिति वदेत् ?, तावत् सप्तदश एकनवति रात्रिन्दिवशतानि एकोनविंशतिश्च मुहूर्त्ताश्च सप्तपञ्चाशद् द्वाषष्टिभागा मुहूर्त्तस्य द्वाषष्टिभागं च सप्तषष्टिधा छित्वा पञ्च पञ्चाशच्चूर्णिकाभागा रात्रिन्दिवाग्रेण आख्यात इति वदेत्। तावत् तत् खलु कियता मुहूर्त्ताग्रेण आख्यातमिति वदेत् ? तावत् त्रिपञ्चाशन्मुहूर्त्तसहस्राणि सप्त च ऊन पञ्चाशन्मुहूर्त्तशतानि सप्तपञ्चाशद् द्वाषष्टिभागा मुहूर्त्तस्य द्वाषष्टिभागं च सप्तषष्टिधा छित्वा पञ्चपञ्चाशच्चूर्णिकाभागा मुहूर्त्ताग्रेण आख्यातमिति वदेत्। तावत् कियता खलु ते युगोत्पत्तिः रात्रिन्दिवाग्रेण आख्याता इति वदेत् ?, तावद् अष्टात्रिंशद् रात्रिन्दिवानि दश च मुहूर्त्ताश्चत्वारश्च द्वाषष्टिभागा मुहूर्त्तस्य द्वाषष्टिभागं च सप्तषष्टिधा छित्वा द्वादशचूर्णिकाभागा रात्रिन्दिवाग्रेण आख्यात इति वदेत्, तावत् स खलु कियता मुहूर्त्ताग्रेण आख्यात इति वदेत् ?, तावदेकादश पञ्चाशत् मुहूर्त्तशतानि चत्वारो द्वाषष्टिभागा मुहूर्त्तस्य द्वाषष्टिभागं च सप्तषष्टिधा छित्वा द्वादशचूर्णिकाभागा मुहूर्त्ताग्रेण आख्यात इति वदेत्। तावत् कियद् युगं रात्रिन्दिवाग्रेण आख्यतमिति वदेत् ?, तावद् अष्टादशत्रिंशद् रात्रिन्दिवशतानि रात्रिन्दिवाग्रेण आख्यातमिति वदेत्, तावत् स खलु कियता मुहूर्त्ताग्रेण आख्यात इति वदेत् ?। तावच्चतुःपञ्चाशन्मुहूर्त्तसहस्राणि नव च मुहूर्त्तशतानि मुहूर्त्ताग्रेण आख्यात इति वदेत्। तावत् सः खलु कियता द्वाषष्टिभागमुहूर्त्ताग्रेण आख्यात इति वदेत् ?। तावच्चतुस्त्रिंशत् शतसहस्राणि अष्टात्रिंशच्च द्वाषष्टिभागा मुहूर्त्तशतानि द्वाषष्टिभागमुहूर्त्ताग्रेण आख्यात इति वदेत् ॥ सू० ७३ ॥

टीका–द्विसप्ततितमे सूत्रे नाक्षत्रादि पञ्च सम्वत्सराणां नामानि तेषामहोरात्र–मुहूर्त्तपरिमाणं च सम्यग् ज्ञात्वा सम्प्रति त्रिसप्ततितमेऽस्मिन् सूत्रे एते पञ्चसम्वत्सरा एकत्र संमीलिता यावत्प्रमाणा भवन्ति रात्रिन्दिवपरिमाणेन तावतः सम्यग् विवृण्वन् प्रश्नोत्तर

---

एकत्र मिले हुवे ये पांचों संवत्सर यावत्माण वाले अहोरात्र परिमाण वाला होता है, वह बताने के उद्देश से प्रथम प्रश्नसूत्र कहते हैं–(ता केवइयं) इत्यादि

टीकार्थ–बहत्तरवें सूत्र में नाक्षत्रादि पांच संवत्सरों के नाम उनके अहोरात्र एवं मुहूर्त का परिमाण सम्यक् प्रकार से जानकर अब इस तिहत्तरवें सूत्रमें ये पांचों संवत्सर इकट्ठे मिलने पर जितने रात्रि दिवस के परिमाण

---

એકઠા મળેલા પાંચે સંવત્સર યાવત્પ્રમાણવાળા અહોરાત્ર પરિમાણવાળા હોય છે. તે બતાવવા માટે પહેલાં પ્રશ્નસૂત્ર કહેવામાં આવે છે. (ता केवइयं ઈત્યાદિ

ટીકાર્થ–બોંતેરમા સૂત્રમાં નક્ષત્રાદિ પાંચ સંવત્સરોના નામો તેના અહોરાત્ર અને મુહૂર્તનું પરિમાણ સારી રીતે જાણીને હવે આ તોંતેરમા સૂત્રમાં આ પાંચે સંવત્સરો

सूत्रमाह—'ता केवइयं' इत्यादिना । 'ता केवइयं ते नो जुगे राइंदियग्गेणं आहिएत्ति वएज्जा' तावत् कियत् ते नो युगं रात्रिन्दिवाग्रेण आख्यातमिति वदेत् ॥-'ता'—तावत्—भवतां कृपया भगवन् युगसंवत्सराणां पृथक् २ परिमाणं ज्ञात्वा सम्प्रति एतेषां समुदायपरिमाणं श्रोतु मिच्छामि तावत्, अत्र नो शब्दो देशनिषेधवाचकस्तेन नो युगं—न किञ्चिदपि ऊनं युगं—पञ्चसंवत्सरैः साग्रैः सम्मिलितं सम्पूर्णं युगं कियत्—किं प्रमाणं भवतीति ते—त्वया भगवन्! रात्रिन्दिवाग्रेण—रात्रिन्दिवपरिमाणेन आख्यातम्—प्रतिपादितमिति वदेत्—कथय भगवन्निति गौतमस्य प्रश्नस्ततो भगवानाह—'ता सत्तरस एकाणउत्ते राइंदियसए एगूणवीसं च मुहुत्तं च सत्तावण्णे बावट्ठिभागे मुहुत्तस्स बावट्ठिभागं च सत्तट्ठिहा छेत्ता पणपण्णं चुण्णियाभागे राइंदियग्गेणं आहिएत्ति वएज्जा' तावत् सप्तदश एकनवतिः रात्रिन्दिवशतानि एकोनविंशतिश्च मुहूर्त्ताश्च सप्तपञ्चाशद् द्वाषष्टिभागाः मुहूर्त्तस्य द्वाषष्टिभागं च सप्तषष्टिधा छित्वा पञ्च पञ्चाशच्चूर्णिका भागा रात्रिन्दिवाग्रेण आख्यातमिति वदेत् ॥—तावदिति पूर्ववत् नो युगं—न किञ्चिदपि ऊनं युगं—सम्पूर्णयुगपरिमाणं खलु सप्तदश एकनवतिः रात्रिन्दिवशतानि—एकनवत्यधिकसप्तदशरात्रिन्दिवशतानि—१७९१ तत्रैतत्तुल्यं

---

वाले होते हैं, उनको सम्यक् प्रकार से वर्णन करते हुए प्रश्नोत्तरसूत्र कहते हैं (ता केवइयं ते नो जुगे राइंदियग्गेणं आहिएत्ति वएज्जा) श्रीगौतमस्वामी कहते हैं कि (ता) हे भगवन् आप की कृपा से युगसंवत्सरों का पृथक् पृथक् परिमाण जाना अब इन पांचों संवत्सरों के समुदाय का परिमाण जानना चाहता हूं, इस में कुछ भी न्यून नहीं अर्थात् समस्त पांचों संवत्सरों का मिलित संपूर्ण युग कितना रात्रि दिवस के प्रमाणवाला कहा है? वह हे भगवन् आप कहिये। इसप्रकार श्रीगौतमस्वामी के प्रश्नको सुनकर उत्तर में श्री भगवान् कहते हैं—(ता सत्तरस एकाणउते राइंदियसए एगूणवीसं च मुहूतं च सत्तावण्णे बावट्ठिभागे मुहुत्तस्स बावट्ठिभागं च सत्तट्ठिहा छेत्ता पणपण्णं चुण्णिया भागे राइंदियग्गेणं आहिएत्ति वएज्जा) (नो युगं) संपूर्ण

---

એકડા મળવાથી જેટલા રાત્રિદિવસના પરિમાણવાળા થાય છે, તેનું યથોચિત રીતે વર્ણન કરતાં પ્રશ્નોત્તરસૂત્ર કહે છે-(ता केवइयं ते नो जुगे राइंदियग्गेणं आहिएत्ति वएज्जा) શ્રીગૌ-ગૌતમસ્વામી કહે છે કે-હે ભગવન્! આપની કૃપાથી યુગસંવત્સરોનું અલગ અલગ પરિમાણ જાણવામાં આવ્યું, હવે આ પાંચે સંવત્સરોના સમુદાયરૂપ યુગનું પરિમાણ જાણવા ઇચ્છું છું. તેમાં કંઈ પણ ન્યૂનતા ન રહે અર્થાત્ સઘળા પાંચે સંવત્સરોથી મળેલ સંપૂર્ણ યુગ કેટલા રાત્રિદિવસના પરિમાણવાળો કહેલ છે? તે હે ભગવન્ આપ કહો, આ પ્રમાણે શ્રીગૌતમસ્વામીના પ્રશ્નને સાંભળીને ઉત્તરમાં શ્રીભગવાન્ કહે છે.—(ता सत्तरस एकाणउते राइंदियसए एगूणवीसं च मुहुत्तं च सत्तावण्णे बावट्ठिभागे मुहुत्तस्स बावट्ठिभागं च सत्तट्ठिहा छेत्ता पणपण्णं चुण्णियाभागे राइंदियग्गेणं आहिएत्ति वएज्जा)

रात्रिन्दिवानां भवति, तथा च एकोनविंशतिश्च–१९ मुहूर्त्ता भवन्ति, एकस्य च मुहूर्त्तस्य सप्तपञ्चाशद् द्वाषष्टिभागा भवन्ति–$\frac{57}{62}$। एकं च द्वाषष्टिभागं सप्तषष्टिधा छित्वा–सप्तषष्ट्या विभज्य तस्य च पञ्चपञ्चाशत् चूर्णिकाभागाः–$\frac{55}{62 \times 67}$ अर्थात् सम्पूर्णस्यैकस्य युगस्य सावयवपरिमाणं खलु–१७९१। १९। $\frac{57}{62}$। $\frac{55}{62 \times 67}$ एतत्तुल्येन सावयवेन रात्रिन्दिवपरिमाणेन संपूर्णमेकं युगं परिपूर्णं भवतीति भगवतः सोपपत्तिकं कथनं तावद् गणितप्रक्रियया दर्शयामि–यतोहि–सम्पूर्णं युगं नाक्षत्रादि पञ्चसम्वत्सरपरिमाणतः सम्पद्यते इत्युक्तं प्राक् तेन नाक्षत्रादि पञ्चानां संवत्सराणा मेकत्र मिलनेन यथोक्तं युगपरिमाणं समुत्पद्यते, इत्यनया युक्त्या तेषामेव नाक्षत्रादि पञ्चानां संवत्सराणां पृथक् पृथक् परिमाणं संकलनीयमिति पूर्वसूत्रे तेषां परिमाणं परिभावितं वर्त्तते–यथा प्रथमस्य नाक्षत्रसंवत्सरस्य परिमाणं खलु सप्तविंशत्यधिकानि त्रीणि शतानि–३२७ रात्रिन्दिवानाम्, एकस्य च रात्रिन्दिवस्य एकपञ्चाशत् सप्तषष्टिभागाः–$\frac{51}{67}$ अर्थात् नाक्षत्रसंवत्सरपरिमाणम्–३२७ + $\frac{51}{67}$ ततो द्वितीयस्य

---

युग का परिमाण सत्रह सौ इक्काणवें १७९१ अहोरात्र तथा उन्नीस मुहूर्त एवं एकमुहूर्त का बासठिया सतावन भाग $\frac{57}{62}$ होता है। तथा बासठिया एक भाग का सडसठ भाग करके उसका पचपन चूर्णिका भाग $\frac{55}{62+67}$ अर्थात् संपूर्ण एक युग का सावयव परिमाण=१७९१।१९।$\frac{57}{62}$।$\frac{55}{62+67}$ इतना सावयव अहोरात्र परिमाण से संपूर्ण एक युग का परिमाण होता है। श्री भगवान के सोपपत्तिक कथन को गणितप्रक्रिया से दिखलाते हैं–जैसे कि–संपूर्ण युग नाक्षत्रादि पांच संवत्सरों के परिमाण से संपन्न होता है, इसप्रकार पहले कहा ही है। अतः नाक्षत्रादि पांचों संवत्सरों का परिमाण को एकत्र करने से यथोक्त युग का परिमाण हो ही जायगा, इसप्रकार की इस युक्ति से उन नाक्षत्रादि पांचो संवत्सरों का पृथक् पृथक् परिमाण का संकलन करलेना चाहिये। पूर्वसूत्र में उनका परिमाण कह ही दिया है। जैसे कि–पहला नाक्षत्रसंवत्सर का परि-

---

(नो युग) संपूर्ण युगनुं परिमाणु सत्तरसो એકાણુ ૧૭૯૧, અહોરાત્ર તથા ઓગણીસ મુહૂર્ત અને એક મુહૂર્તના બાસઠિયા સત્તાવન ભાગ $\frac{57}{62}$ થાય છે તથા બાસઠિયા એક ભાગના સડસઠ ભાગ કરીને તેના પંચાવન ચૂર્ણિકા ભાગ $\frac{55}{62 \times 67}$ અર્થાત્ એક યુગનું સાવયવ પરિમાણુ ૧૭૯૧।૧૯।$\frac{57}{62}$।$\frac{55}{62 \times 67}$ આટલા સાવયવ અહોરાત્ર પરિમાણુથી સંપૂર્ણ એક યુગનું પરિમાણુ થાય છે. શ્રીભગવાનના સોપપત્તિક કથનનું સમર્થન ગણિત પ્રક્રિયાથી બતાવેછે–જેમકે–સંપૂર્ણ યુગ નક્ષત્રાદિ પાંચ સંવત્સરોના પરિમાણુથી સંપન્ન થાય છે. આ પ્રમાણે પહેલા કહેવામાં આવેલજ છે. તેથી નક્ષત્રાદિ પાંચે સંવત્સરનું પરિમાણુ મેળવાથી યથોક્ત રીતે યુગનું પરિમાણુ થઈ જાય છે. આ રીતની આ યુક્તિથી એ નાક્ષત્રાદિ પાંચે સંવત્સરોના અલગ અલગ પરિમાણુને મેળવી લેવું જોઈએ. પૂર્વસૂત્રમાં તેમનું પરિમાણુ કહેલજ છે. જેમકે–પહેલા નાક્ષત્રસંવત્સરનું પરિમાણુ ત્રણસો સત્યાવીસ ૩૨૭ અહોરાત્ર

चान्द्रसंवत्सरस्य परिमाणं चतुः पञ्चाशदधिकानि त्रीणि शतानि रात्रिन्दिवानाम्, एकस्य च रात्रिन्दिवस्य द्वादश द्वापष्टिभागा इत्येवं चान्द्रसंवत्सरस्य परिमाणं–३५४+$\frac{१२}{६२}$ (२)। ततस्तृतीयस्य ऋतु सम्वत्सरस्य परिमाणं तत्रैव–षष्ठ्यधिकानि त्रीणि रात्रिन्दिवशतानि–३६०–रात्रिन्दिवतुल्यं ऋतु संवत्सरस्य परिमाणम्–३६०–(३)। ततश्चतुर्थस्य सौर (सूर्य) संवत्सरस्य परिमाणं षट् षष्ठ्यधिकानि त्रीणि शतानि–३६६ रात्रिन्दिवानाम् (४)। ततः पञ्चमस्याभिवर्द्धितसंवत्सरस्य परिमाणं खलु त्रीणि रात्रिन्दिवशतानि त्र्यशीत्यधिकानि–३८३ रात्रिन्दिवानाम्, एकविंशतिश्च-२१ मुहूर्त्ताः। एकस्य च मुहूर्त्तस्य अष्टादश द्वापष्टिभागाः $\frac{१८}{६२}$ अर्थात् ३८३। २१। $\frac{१८}{६२}$ इत्येवंभूतमभिवर्द्धितसंवत्सरस्य परिमाणमिति (५)। अत एतेषां पञ्चसंवत्सरपरिमाणाना मेकत्र मेलनार्थम् यथाक्रमेण न्यासो विधेय इति तथा क्रियते यथा–

**माण तीनसो सताईस ३२७ अहोरात्र तथा एक अहोरात्र का सडसठिया एकावन भाग $\frac{५१}{६७}$ (१) अर्थात् नाक्षत्र संवत्सर का परिमाण ३२७+$\frac{५१}{६७}$ कहा गया है। दूसरा चांद्रसंवत्सर का परिमाण तीनसो चोपन अहोरात्र तथा एक रात्रि दिवस का बासठिया बारह भाग इसप्रकार से चांद्रसंवत्सर का परिमाण–३५४+$\frac{१२}{६२}$ (२) तीसरा ऋतुसंवत्सर का परिमाण तीनसो साठ रात्रि ३६०। परिमाणवाला कहा है (३) तथा चौथा सौर (सूर्य) संवत्सर का परिमाण तीनसो छियासठ अहोरात्र ३६६। प्रमाण का कहा है (४) पांचवें अभिवर्धितसंवत्सर का परिमाण तीनसो तिरासी अहोरात्र ३८३ तथा इकीस मुहूर्त २१। एवं एक मुहूर्त का बासठिया अठारह भाग $\frac{१८}{६२}$ अर्थात् ३८३।२१।$\frac{१८}{६२}$ इसप्रकार पांचवें अभिवर्द्धितसंवत्सर का परिमाण कहा गया है (५) अतः इन पांचों संवत्सरों के परिमाण को एक साथ जोडने के लिये यथाक्रम अंक न्यास करते हैं–**

તથા એક અહોરાત્રના સડસઠિયા એકાવન ભાગ $\frac{૫૧}{૬૭}$ અર્થાત્ નાક્ષત્રસંવત્સરનું પરિમાણ ૩૨૭+$\frac{૫૧}{૬૭}$ કહેલ છે. (૧) બીજા ચાંદ્રસંવત્સરનું પરિમાણ ત્રણસો ચોપન અહોરાત્ર તથા એક રાત્રિદિવસના બાસઠિયા બાર ભાગ આ રીતે ચાંદ્રસંવત્સરનું પરિમાણ ૩૫૪+$\frac{૧૨}{૬૨}$ (૨) ત્રીજા ઋતુ સંવત્સરનું પરિમાણ ત્રણસોસાઠ રાત્રિદિવસ ૩૬૦ના પરિમાણવાળું કહેલ છે. (૩) ચોથા સૌર (સૂર્ય) સંવત્સરનું પરિમાણ ત્રણસો છાસઠ અહોરાત્ર ૩૬૬। પ્રમાણનું કહેલ છે. (૪) પાંચમા અભિવર્ધિત સંવત્સરનું પરિમાણ ત્રણસો ત્યાશી ૩૮૩। અહોરાત્ર તથા એકવીસ મુહૂર્ત ૨૧। અને એક મુહૂર્તના બાસઠિયા અઢાર ભાગ $\frac{૧૮}{૬૨}$ અર્થાત્ ૩૮૩। ૨૧।$\frac{૧૮}{૬૨}$ આ રીતે પાંચમા અભિવર્ધિત સંવત્સરનું પરિમાણ કહેવામાં આવેલ છે (૫) આ પાંચે સંવત્સરોના પરિમાણને એક સાથે મેળવીને બતાવવા માટે યથાક્રમ અંકન્યાસ કરવામાં આવે છે.

(१) नाक्षत्रसम्वत्सरपरिमाणम् — ३२७ | $\frac{51}{67}$ | ००
(२) चान्द्रसंवत्सरपरिमाणम् — ३५४ | $\frac{12}{62}$ | ००
(३) ऋतुसंवत्सरपरिमाणम् — ३६० | ०० | ००
(४) सूर्यसम्वत्सरपरिमाणम् — ३६६ | ०० | ००
(५) अभिवर्द्धितसम्वत्सरपरिमाणम् — ३८३ | २१ | $\frac{18}{62}$

१७९० | सावयवानि रात्रिन्दिवानि ।

जातानि सम्पूर्णानां रात्रिन्दिवानां नवत्यधिकानि सप्तदशशतानि । ततश्च सावयवानामङ्कानां योगे कर्त्तव्ये सति प्रथमं ये च एकपञ्चाशत् सप्तषष्टिभागाः रात्रिन्दिवस्य ते च मुहूर्तकरणार्थं त्रिंशता गुण्यन्ते $\frac{51}{67} \times ३० = \frac{1530}{67}$ जातानि सप्तषष्टिभागानां त्रिंशदधिकानि पञ्चदशशतानि, तानि च सप्तषष्ट्या ह्रियन्ते—$\frac{1530}{67} = २२ + \frac{56}{67}$ लब्धा द्वाविंशतिर्मुहूर्त्ताः, एकस्य च मुहूर्त्तस्य षट् पञ्चाशत् सप्तषष्टिभागा इति । तत एते द्वाविंशतिर्मुहूर्त्ता, अभिवर्द्धितसंवत्सरस्य एकविंशतौ मुहूर्त्तेषु योज्याः=२१+२२=४३ जातास्त्रि चत्वारिंन्मुहूर्त्ताः । अत्र

(१) नाक्षत्रसंवत्सर का परिमाण— ३२७|$\frac{51}{67}$|००
(२) चांद्रसंवत्सर का परिमाण— ३५४|$\frac{12}{62}$|००
(३) ऋतु संवत्सर का परिमाण— ३६०|००|००
(४) सूर्यसंवत्सर का परिमाण— ३६६|००|००
(५) अभिवर्धितसंवत्सर का परिमाण— ३८३|२१|$\frac{18}{62}$

१७९०| सावयव अहोरात्र

इसप्रकार संपूर्ण अहोरात्र सत्रहसो नव्वे होते हैं, तत्पश्चात् सावयव अंको का योग करे तो पहला जो सडसठिया इक्कावन अहोरात्र का भाग है, उनका मुहूर्त करने के लिये तीस से गुणा करे $\frac{51}{67}$+३०=१९ $\frac{1530}{67}$ सडसठिया पंद्रहसो तीस होते हैं, उन को सडसठ से भाग करे—$\frac{1530}{67} = २२ + \frac{56}{67}$ तो बावीस मुहूर्त तथा एक मुहूर्त का सडसठिया छप्पन भाग आता है। इन बाईस

(૧) નક્ષત્રસંવત્સરનું પરિમાણ=૩૨૭|$\frac{51}{67}$|૦૦
(૨) ચાંદ્રસંવત્સરનું પરિમાણ=૩૫૪|$\frac{12}{62}$|૦૦
(૩) ઋતુ સંવત્સરનું પરિમાણ=૩૬૦|૦૦|૦૦
(૪) સૂર્ય સંવત્સરનું પરિમાણ=૩૬૬|૦૦|૦૦
(૫) અભિવર્ધિતસંવત્સરનું પરિમાણ=૩૮૩|૨૧|$\frac{18}{62}$ ૧૭૯૦ સાવયવ અહોરાત્ર

આ રીતે સંપૂર્ણ અહોરાત્ર સત્તરસોનેવું થાય છે. તે પછી સાવયવ અંકોનો યોગ કરવામાં આવે તો પહેલું જે સડસઠિયા એકાવન અહોરાત્ર છે. તેના મુહૂર્ત કરવા માટે ત્રીસથી ગુણાકાર કરવો $\frac{51}{67}$+૩૦=$\frac{1530}{67}$ આ રીતે સડસઠિયા પંદરસો ત્રીસ થાય છે. તેનો સડસઠથી ભાગ કરે તો=$\frac{1530}{67}$=૨૨+$\frac{56}{67}$ બાવીસ મુહૂર્ત તથા એક મુહૂર્તના સડસઠિયા છપ્પન ભાગ આવે છે. આ બાવીસ મુહૂર્તોને અભિવર્ધિત સંવત્સરના એકવીસ મુહૂર્તોની

त्रिंशता मुहूर्त्तैरेकोऽहोरात्रो भवतीति नियमदर्शनात् स चैकोऽहोरात्रः पूर्वसंकलितेषु नवत्यधिकसप्तदशशतपरिमितेषु १७९० अहोरात्रेषु प्रक्षिप्यते १७९०+१=१७९१ जातान्यहोरात्राणां सप्तदश शतानि एकनवत्यधिकानि, शेषास्तिष्ठन्ति त्रयोदशमुहूर्त्ताः–$\frac{४३}{३०}$–१ अहोरात्र +१३ मुहूर्त्ता इति। ततो ये च चान्द्रसम्वत्सरे द्वादश द्वाषष्टिभागा अहोरात्रस्य तेऽपि मुहूर्त्तकरणार्थं त्रिंशता गुण्यन्ते $\frac{१२}{६२}$=३०=$\frac{३६०}{६२}$=५+$\frac{५०}{६२}$ प्रथमं त्रिंशता गुणनेन जातं गुणनफलं द्वाषष्टिभागानां षष्ट्यधिकानि त्रीणि शतानि, द्वाषष्ट्या च भागे हृते लब्धाः पञ्चमुहूर्त्ताः एकस्य च मुहूर्त्तस्य पञ्चाशद् द्वाषष्टिभागाः। ते च लब्धाः पञ्चमुहूर्त्ताः पूर्वावशिष्टेषु त्रयोदशसु मुहूर्त्तेषु प्रक्षिप्यन्ते–१३+५=१८ जाता अष्टादश मुहूर्त्ताः। शेषास्तिष्ठन्ति पञ्चाशद् द्वाषष्टिभागाः $\frac{५०}{६२}$ मुहूर्त्तस्य। ये च पूर्वं षट् पञ्चाशत् सप्तषष्टिभागा मुहूर्त्तस्य $\frac{५६}{६७}$ तेऽपि त्रैरा-

---

मुहूर्तों को अभिवर्धितसंवत्सर के इक्कीस मुहूर्तों के साथ मिलावे–२१+२२=४३ तो इसप्रकार तयालीस मुहूर्त होते हैं, अब तीस मुहूर्त से एक अहोरात्र होता है, इस नियमानुसार उस एक अहोरात्र को पूर्व कहे हुवे सत्रहसो नव्वे १०९० अहोरात्र के साथ जोडे तो १७९०+१=१७९१ सत्रहसौ इकाणवे अहोरात्र होते हैं। तथा तेरह मुहूर्त शेष रहता है–$\frac{४३}{३०}$=१ अहोरात्र+१३ मुहूर्त। तत्पश्चात् जो चांद्र संवत्सर का बासठिया बारह भाग अहोरात्र संबंधी है, उनका मुहूर्त करने के लिये तीस से गुणा करे $\frac{१२}{६२}$+३०=$\frac{३६०}{६२}$=५+$\frac{५०}{६२}$ प्रथम तीस से गुणा करने से गुणन फल बासठिया तीनसो साठ होते हैं उस का बासठ से भाग करने से पांच मुहूर्त तथा एक मुहूर्त का बासठिया पचास भाग होता है। ये जो पांच मुहूर्त आये है उसको पहले के अवशेष जो तेरह मुहूर्त है उसके साथ जोडे–१३+५=१८ तो अठारह मुहूर्त होते हैं। तथा एक मुहूर्त का बासठिया पचास भाग शेष बचता है $\frac{५०}{६२}$। प्रथम जो एक मुहूर्त का सडसठिया छप्पन भाग $\frac{५६}{६७}$ है, उनका त्रैराशिक पद्धति से बासठ भाग करे

---

સાથે મેળવે=૨૧×૨૨=૪૩ તો આ રીતે તેંતાલીસ મુહૂર્ત થાય છે. હવે ત્રીસ મુહૂર્તથી એક અહોરાત્ર થાય છે. આ નિયમ પ્રમાણે એ એક અહોરાત્રને પહેલાં કહેલ સત્તરસો નેવું ૧૭૯૦ા અહોરાત્રની સાથે મેળવે તો ૧૭૯૦÷૧=૧૭૯૧ સત્તરસો એકાણુ અહોરાત્ર થાય છે. તથા તેર મુહૂર્ત શેષ રહે છે. $\frac{૪૩}{૩૦}$=૧ અહોરાત્ર+૧૩ મુહૂર્ત તે પછી ચાંદ્ર સંવત્સરના જે અહોરાત્ર સંબંધી બાસઠિયા બાર ભાગ છે તેના મુહૂર્ત કરવા માટે ત્રીસથી ગુણાકાર કરવો. $\frac{૧૨}{૬૨}$+૩૦=$\frac{૩૬૦}{૬૨}$=૫+$\frac{૫૦}{૬૨}$ પહેલાં ત્રીસથી ગુણવાથી ગુણનફલ બાસઠિયા ત્રણસો સાઇઠ થાય છે. તેનો બાસઠથી ભાગ કરવાથી પાંચ મુહૂર્ત તથા એક મુહૂર્તના બાસઠિયા પચાસ ભાગ થાય છે, જે આ પાંચ મુહૂર્ત આવેલ છે તેને પહેલાના બાકી જે તેર મુહૂર્ત રહ્યા છે. તેની સાથે મેળવવા=૧૩+૫=૧૮ જેથી અઢાર મુહૂર્ત થાય છે. તથા એક મુહૂર્તના બાસઠિયા પચાસ ભાગ શેષ રહે છે. $\frac{૫૦}{૬૨}$ પહેલાના જે એક મુહૂર્તના

शिकेन द्वाषष्टिभागाः क्रियन्ते यथा—यदि सप्तषष्ट्या द्वाषष्टिभागा लभ्यन्ते तदा षट् पञ्चाशता सप्तषष्टिभागैः कियन्तो द्वाषष्टिभागा लभ्यन्ते इति त्रैराशिकस्थापनाय यथा $\frac{६२}{६७}\times\frac{५६}{६२}=\frac{३४७२}{६७+६२}$ अत्रान्त्येन राशिना मध्यराशेर्गुणनं, जातानि चतुस्त्रिंशच्छतानि द्वासप्तत्यधिकानि ३४७२ एतेषामादिराशिना सप्तषष्ट्या भागो ह्रियते यथा—$\frac{३४७२}{६७+६२}=\frac{५१}{६२+६७}$ लब्धा एकपञ्चाशद् द्वाषष्टिभागाः। ते च प्रागुक्तेषु पञ्चाशति द्वाषष्टिभागेषु अन्तः प्रक्षिप्यन्ते $\frac{५०}{६२}+\frac{५१}{६२}=\frac{१०१}{६२}$ जातमेकोत्तरशतं द्वाषष्टिभागानाम्—$\frac{१०१}{६२}$ एतन्मध्ये अभिवर्द्धितसंवत्सरसत्का उपरितना अष्टादश द्वाषष्टिभागाः प्रक्षिप्यन्ते—$\frac{१०१}{६२}+\frac{१८}{६२}=\frac{११९}{६२}$ जातम् एकोनविंशत्यधिकं शतं द्वाषष्टिभागानाम्। एतेषां द्वाषष्ट्या भागो ह्रियते $\frac{११९}{६२\times६७}=१+\frac{५७}{६२\times६७}$ लब्ध एको मुहूर्त्तः स च पूर्वोक्तेषु संगृहीतेषु अष्टादश मुहूर्त्तेषु प्रक्षेप्यः १८+१=१९ जाता एकोनविंशति मुहूर्त्ताः। शेषास्तिष्ठन्ति सप्तपञ्चाशद् द्वाषष्टिभागानां सप्तषष्टिभागा इति। ततो यथाक्रमेण सर्वेषां न्यासः

---

जैसे कि—जो सडसठ से बासठ भाग लब्ध हो तो सडसठिया छप्पन भाग से कितने बासठिया भाग लब्ध हो सकते हैं? इसकि त्रैराशिक स्थापना इस प्रकार से हैं—$\frac{६२+५६}{६७+६२}=\frac{३४७२}{६७+६२}$ यहां अन्त्य राशि से मध्य राशि का गुणा करेने से चोतीससौ बहत्तर ३४७२ होते हैं। इनका प्रथम की राशि जो सडसठ है इससे भाग करे, जैसे कि $\frac{३४७२}{६७+६२}=\frac{५१}{६२+६७}$ इसप्रकार बासठिया इकावन भाग लब्ध होते हैं। इनको पूर्वकथित बासठिया पचास भाग में प्रक्षिप्त करे $\frac{५०}{६२}+\frac{५१}{६७}=\frac{१०१}{६२}$ तो इसप्रकार बासठिया एकसो एक भाग होते हैं $\frac{१०१}{६२}$। इनमें अभिवर्धितसंवत्सर का ऊपर कहा हुवा बासठिया अठारह भाग को जोडे—$\frac{१०१}{६२}+\frac{१८}{६२}=\frac{११९}{६२}$ तो इसप्रकार बासठिया एकसो उन्नीस भाग होते हैं। इस संख्या का बासठ से भाग करे $\frac{११९}{६२+६७}=१+\frac{५७}{६२+६७}$ तो एक मुहूर्त लब्ध होता है, उसको पूर्वोक्त अठारह मुहूर्त है उसके साथ जोडे तो १८+१=१९ उन्नीस मुहूर्त

---

સડસઠિયા છપ્પન ભાગ છે $\frac{૫૬}{૬૭}$ તેના ત્રૈરાશિક પદ્ધતિથી બાસઠ ભાગ કરે જેમકે જો સડસઠથી બાસઠ ભાગ લબ્ધ થાય તો સડસઠિયા છપ્પન ભાગથી કેટલા બાસઠિયા ભાગ લબ્ધ થઇ શકે? આ માટે ત્રૈરાશિક સ્થાપના આ રીતે છે.—$૬૨+૫૬=\frac{૩૪૭૨}{૬૭+૬૨}$ અહીં અન્ત્ય રાશિથી મધ્યરાશિનો ગુણાકાર કરવાથી ચોત્રીસસો બોંતેર ૩૪૭૨ થાય છે. તેનો પહેલાંની સંખ્યા જે સડસઠ છે તેનાથી ભાગ કરવો જેમકે—$\frac{૩૪૭૨}{૬૭\times૬૨}=\frac{૫૧}{૬૨+૬૭}$ આ રીતે બાસઠિયા એકાવન ભાગ લબ્ધ થાય છે. તેને પહેલાં કહેલ બાસઠિયા પચાસ ભાગની સાથે મેળવવાથી $\frac{૫૦}{૬૨}+\frac{૫૧}{૬૨}=\frac{૧૦૧}{૬૨}$ આ રીતે બાસઠિયા એકસો એક ભાગ થાય છે. $\frac{૧૦૧}{૬૨}$। આમાં અભિવર્ધિતસંવત્સરના ઉપર કહેલ બાસઠિયા અઢાર ભાગને મેળવવા $\frac{૧૦૧}{૬૨}+\frac{૧૮}{૬૨}=\frac{૧૧૯}{૬૨}$થી આ રીતે બાસઠિયા એકસો ઓગણીસ ભાગ થાય છે. આ સંખ્યાનો બાસઠથી ભાગ કરવો $\frac{૧૧૯}{૬૨\times૬૭}=૧+\frac{૫૭}{૬૨\times૬૭}$ જેથી એક મુહૂર્ત લબ્ધ થાય છે. તેને પૂર્વ કથિત અઢાર મુહૂર્ત છે તેની સાથે મેળવવામાં આવે તો ૧૮+૧=૧૯ ઓગણીસ મુહૂર્ત થાય છે.

७९१। १९। $\frac{५७}{६२+६७}$=१७९१। १९। $\frac{५७}{६२}$। $\frac{५५}{६२\times६७}$ अर्थादेकस्य संपूर्णयुगस्य परिमाणं खलु एकनवत्यधिकानि सप्तदशशतानि रात्रिन्दिवानाम्, एकोनविंशतिश्च मुहूर्त्ताः, एकस्य च मुहूर्त्तस्य सप्तपञ्चाशद् द्वापष्टिभागाः, एकस्य च द्वापष्टिभागस्य पञ्चपञ्चाशत् सप्तपष्टिभागाः, एतत्तुल्येन सावयवेन रात्रिन्दिवाग्रेणैकं युगं प्रपूर्यत इति ॥ उक्तं च मूले-'सत्तरस एकाणउते राइंदियसए एगूणवीसं च मुहुत्तं सत्तावण्णे बावट्ठिभागे मुहुत्तस्स बावट्ठिभागं च सत्तट्ठिहा छेत्ता पणपण्णं चुण्णियाभागा राइंदियग्गेणं आहिएत्ति' इति ॥

अथ पूर्णयुगस्य मुहूर्त्तपरिमाणं जिज्ञासुस्तावन्मुहूर्त्ताग्रनिर्वचनरूपं सूत्रं प्रश्नयति.... गौतमः-'ता से णं केवइए मुहुत्तग्गेणं आहिएत्ति वएज्जा ?' तावत् तत् खलु कियता मुहूर्त्ताग्रेण आख्यात इति वदेत् ॥-तावदिति पूर्ववत् तत्-सम्पूर्णयुगपरिमाणं खलु इति वाक्यालङ्कारे कियता मुहूर्त्ताग्रेण-मुहूर्त्तपरिमाणेन आख्यातम्-प्रतिपादितम् इति वदेत्-कथय भगवन्निति प्रश्नस्ततो भगवानाह-'ता तेपण्णमुहुत्तसहस्साइं सत्त य उणा पण्णे

---

होते हैं। तथा $\frac{५७}{६२}$ बासठिया सत्तावन भाग रहता है इन सब का यथाक्रम से अंक न्यास १७९१।१९।$\frac{५७}{६२+६७}$=१७९१।१९।$\frac{५७}{६२}$।$\frac{५५}{६२+६७}$ अर्थात् संपूर्ण एक युग का परिमाण सत्रहसो इक्काणवें अहोरात्र तथा उन्नीस मुहूर्त एवं एक मुहूर्त का बासठिया सतावन भाग तथा बासठिया एक भाग का सडसठिया पचपन भाग होते हैं। इतना प्रमाण वाले सावयव रात्रि दिवस परिमाण से संपूर्ण एक युग होता है ॥ मूल में कहा भी है-(सत्तरस एकाणउते राइंदियसए, एगूणवीसं च मुहुत्तं सत्तावण्णे बासट्ठिभागे मुहुत्तस्स बावट्ठिभागं च सत्तट्ठिहा छेत्ता पणपण्णं चुण्णिया भागा राइंदियग्गे णं आहिएत्ति)

अब श्रीगौतमस्वामी संपूर्ण युग का मुहूर्त परिमाण को जानने के लिये मुहूर्ताग्रनिर्वचन रूप सूत्र द्वारा प्रश्न करते हैं-(ता सेणं केवइए मुहुत्तग्गेणं आहिएत्ति वएज्जा) हे भगवन् संपूर्ण युग परिमाण कितने मुहूर्त परिमाण से प्रतिपादित किया है ? सो कहिये इसप्रकार श्रीगौतमस्वामी के प्रश्न को सुनकर

---

તથા બાસઠિયા સત્તાવન $\frac{૫૭}{૬૨}$ ભાગ શેષ રહે છે. આ બધાનો ક્રમાનુસાર અંકન્યાસ ૧૭૯૧।૧૯।$\frac{૫૭}{૬૨\times૬૭}$ =૧૭૯૧।$\frac{૫૭}{૬૨}$।$\frac{૫૫}{૬૨\times૬૭}$ અર્થાત્ સંપૂર્ણ એક યુગનું પરિમાણ સત્તરસો એકાણુ અહોરાત્ર તથા ઓગણીસ મુહૂર્ત અને એક મુહૂર્તના બાસઠિયા સતાવન ભાગ તથા બાસઠિયા એક ભાગના સડસઠિયા પંચાવન ભાગ થાય છે. આટલા પ્રમાણવાળા સાવયવ રાત્રિદિવસના પરિમાણથી સંપૂર્ણ એક યુગ થાય છે. મૂલમાં કહ્યું પણ છે.-(सत्तरस एकाणउत्ते राइंदियस ए, एगूणवीसं च मुहुत्तं सत्तावण्णे बासट्ठिभागे मुहुत्तस्स बावट्ठिभागं च सत्तट्ठिहा छेत्ता पणपण्णं चुण्णियांभागा राइंदियग्गेणं आहिएत्ति)

હવે શ્રીગૌતમસ્વામી સંપૂર્ણ યુગના મુહૂર્ત પરિમાણને જાણવા માટે મુહૂર્તાગ્ર નિર્વચનરૂપ સૂત્રદ્વારા પ્રશ્ન પૂછે છે-(ता सेणं केवइए मुहुत्तग्गेणं आहिएत्ति वएज्जा) હે ભગવન્ સંપૂર્ણ યુગ પરિમાણ કેટલા મુહૂર્ત પરિમાણથી પ્રતિપાદિત કરેલ છે ? તે કહો ?

मुहुत्तसए सत्तावण्णं बावट्ठिभागे मुहुत्तस्स बावट्ठिभागं च सत्तट्ठिहा छेत्ता पणपण्णं चुण्णिया भागा मुहुत्तग्गेणं आहिएत्ति वएज्जा' तावत् त्रिपञ्चाशन्मुहूर्त्तसहस्राणि सप्तचोन पञ्चाशन्मुहूर्त्तशतानि सप्तपञ्चाशद् द्वापष्टिभागा मुहूर्त्तस्य द्वापष्टिभागं च सप्तषष्टिधा छित्वा पञ्चपञ्चाशच्चूर्णिकाभागा मुहूर्त्ताग्रेण आख्यातमिति वदेत् ॥–तावदिति पूर्ववत् तत् सम्पूर्णयुगपरिमाणं खलु मुहूर्त्तपरिमाणेन मापितं सति मुहूर्त्तानां त्रिपञ्चाशत् सहस्राणि सप्तचोनपञ्चाशन्मुहूर्त्तशतानि–ऊन पञ्चाशदधिकानि सप्तशतानि च मुहूर्त्तानामर्थात्–५३७४९ तत्रैतन्मुहूर्त्त परिमाणाम्, एकस्य च मुहूर्त्तस्य सप्तपञ्चाशद् द्वापष्टिभागाः–$\frac{५७}{६२}$ । एकस्य द्वापष्टिभागस्य पञ्चपञ्चाशत् सप्तषष्टिभागाः–$\frac{५५}{६२+६७}$ समग्रेण स्थापना मुहूर्त्तादीनां यथाक्रमेण न्यासः ५३७४९ । $\frac{५७}{६२}$ । $\frac{५५}{६२+६७}$ एतत्तुल्येन मुहूर्त्ताग्रेण–सावयव मुहूर्त्तपरिमाणेन आख्यातम्–प्रतिपादितं–स्वशिष्येभ्य उपदेष्टव्यमिति ध्येयम् ॥ कथमेतावन्तोमुहूर्त्ता इति चेदुच्यते–अत्रैव सूत्रे प्रथमं युगपरिमाणमुक्तं खलु एकनवत्यधिकानि सप्तदशशतानि रात्रिन्दिवानाम्–१७९१ एकोनविंशतिश्च मुहूर्त्ताः–१९ । एकस्य च मुहूर्त्तस्य सप्तपञ्चाशद् द्वापष्टिभागाः–$\frac{५७}{६२}$ एकस्य च

उसके उत्तर में श्रीभगवान् कहते हैं (ता तेवण्णमुहुत्तसहस्साइं सत्तय उणापण्णे मुहुत्तसए सत्तावण्णं बासट्ठिभागे मुहुत्तस्स बावट्ठिभागं च सत्तट्ठिहा छेत्ता पणपण्णं चुण्णियाभागा मुहुत्तग्गे णं आहिएत्ति वएज्जा) हे गौतम ! संपूर्ण युग का परिमाण मुहूर्तपरिमाण से नापे तो तिरपन हजार सातसो उनचास मुहूर्त ५३७४९ तथा एक मुहूर्त का बासठिया सतावन भाग $\frac{५७}{६२}$ एवं बासठिया एक भाग का सडसठिया पचपन भाग $\frac{५५}{६२+६७}$ होते हैं। मुहूर्तादि का समग्ररूप से स्थापना क्रमानुसार अंकन्यास इसप्रकार से हैं–५३७४९। $\frac{५७}{६२}$। $\frac{५५}{६२+६७}$ इतने परिमाण वाले सावयव मुहूर्तपरिमाण से युग का मुहूर्तपरिमाण प्रतिपादित किया है, ऐसा स्व शिष्यों को उपदेश करें। इतना मुहूर्त परिमाण किस प्रकार से होता है ? इसके लिये कहते हैं–इसी सूत्र में पहले एक युग का परिमाण सत्रहसो इक्काणवें १७९१ अहोरात्र तथा उन्नीस मुहूर्त १९। एवं एक

આ પ્રમાણે શ્રીગૌતમસ્વામીના પ્રશ્નને સાંભળીને તેના ઉત્તરમાં કહે છે–(ता तेवण्ण-मुहुत्तसए सत्तावण्णं बावट्ठिभागे मुहुत्तस्स बावट्ठिभागं च सत्तट्ठिहा छेत्ता पणपण्णं चुण्णिया भागा मुहुत्तग्गेणं आहिएत्ति वएज्जा) હે ગૌતમ ! સંપૂર્ણ યુગનું પરિમાણ મુહૂર્ત પરિમાણથી માપવામાં આવે તો ત્રેપનહજાર સાતસો ઓગણપચાસ મુહૂર્ત ૫૩૭૪૯ તથા એક મુહૂર્તના બાસઠિયા સતાવન ભાગ $\frac{૫૭}{૬૨}$ તથા બાસઠિયા એક ભાગના સડસઠિયા પંચાવન ભાગ $\frac{૫૫}{૬૨+૬૭}$ આટલા પરિમાણવાળા સાવયવ મુહૂર્ત પરિમાણથી યુગનું મુહૂર્ત પરિમાણ પ્રતિપાદિત કરેલ છે તેમ સ્વશિષ્યોને ઉપદેશ કરવો, આટલું મુહૂર્તપરિમાણ કેવી રીતે થાય છે? તે જાણવા કહે છે–પહેલા આ સૂત્રના કથનમાં એક યુગનું પરિમાણ સત્તરસો એકાણું ૧૭૯૧ અહોરાત્ર તથા ઓગણીસ મુહૂર્ત ૧૯ અને એક મુહૂર્તના બાસઠિયા

द्वाषष्टिभागस्य पञ्च पञ्चाशत् सप्तषष्टिभागाः ५५/६२+६७ एतत्तुल्येन सावयवेन रात्रिन्दिवाग्रेण सम्पूर्णयुगपरिमाणं प्रतिपादितं भावितं चेति । अत्रोक्तस्यैव रात्रिन्दिवपरिमाणस्य मुहूर्त्त-करणार्थं त्रिंशता गुणनेन तदुपरि शेषमुहूर्त्तप्रक्षेपेण च यथोक्तं मुहूर्त्तपरिमाणं समुत्पद्येत, यथा–१७९१ × ३०–५३७३० अत्रोपरितनाः शेषमुहूर्त्ताः प्रक्षिप्यन्ते ५३७३०+१९= ५३७४९ अवशिष्टभागाश्च तथैव तिष्ठन्ति, तेन यथाक्रमपूर्वकं सर्वेषां न्यासः ५३७४९ । ५७/६२ । ५५/६२+६७ इत्युपपद्यते–त्रिपञ्चाशन्मुहूर्त्तसहस्राणि सप्तशतानि एकोनपञ्चाशदधिकानि मुहू-र्त्तानाम्, एकस्य च मुहूर्त्तस्य सप्तपञ्चाशद् द्वाषष्टिभागाः, एकस्य च द्वाषष्टिभागस्य पञ्च-पञ्चाशत् सप्तषष्टिभागा इति ॥ उक्तं च मूले–'ता तेवण्णमुहुत्तसहस्साइं सत्त य उणापण्णे मुहुत्तसए सत्तावण्णं बावट्ठिभागे मुहुत्तस्स बावट्ठिभागं च सत्तट्ठिहा छेत्ता पणपण्णं चुण्णिया-भागा मुहुत्तग्गेणं आहिएत्ति वएज्जा' इत्येवमुपपद्यते ॥ अथ युगक्षेपपरिमाणं पृच्छति–'ता

---

मुहूर्त का बासठिया सतावन भाग ५७/६२ तथा बासठिया एक भाग का सड-सठिया पचपन भाग ५५/६२+६७ इतने परिमाण वाले सावयव रात्रिदिन से संपूर्ण युग का परिमाण प्रतिपादित किया है। यहां पर कहे हुवे अहोरात्र के परि-माण का मुहूर्त करने के लिए इसको तीस से गुणा करने से तथा उसमें शेष मुहूर्त का प्रक्षेप करने से यथोक्त मुहूर्त परिमाण हो जाता है। जैसे कि–१७९१ +३०=५३७३० यहां ऊपर के शेष मुहूर्त को उसके साथ जोडे तो ५३७३०+ १९=५३७४९ तथा शेष भाग उसी प्रकार रहता है। अतः यथाक्रम इन सब संख्याओं का न्यास इसप्रकार से है–५३७४९।५७/६२।५५/६२+६७ इसप्रकार तिरपन हजार सातसो उनचास मुहूर्त तथा एक मुहूर्त का बासठिया सतावन भाग तथा बासठिया एक भाग का सडसठिया पचपन भाग होते हैं। मूल में कहा भी है–(ता तेपण्णमुहुत्तसहस्साइं सत्तय उणापण्णे मुहुत्तसए सत्तावण्णं बावट्ठि भागे मुहुत्तस्स बावट्ठिभागं च सत्तट्ठिहा छेत्ता पणपण्णं चुण्णियाभागा मुहु-

---

સતાવન ભાગ ૫૭/૬૨ તથા બાસઠિયા એક ભાગના સડસઠિયા પંચાવન ભાગ ૫૫/૬૨×૬૭ આટલા પરિમાણવાળા સાવયવ રાત્રિદિવસથી સંપૂર્ણ યુગનું પરિમાણ પ્રતિપાદિત કરેલ છે.

અહીં કહેલ અહોરાત્રના પરિમાણના મુહૂર્ત કરવા માટે આનો ત્રીસથી ગુણાકાર કરવાથી તથા તેમાં શેષ મુહૂર્તનો પ્રક્ષેપ કરવાથી યથોક્ત મુહૂર્ત પરિમાણ થઈ જાય છે. જેમકે–૧૭૯૧+૩૦=૫૩૭૩૦। અહીં ઉપરના શેષ મુહૂર્તને આ સંખ્યાની સાથે મેળવેતો ૫૩૭૩૦+૧૯=૫૩૭૪૯। તથા શેષ ભાગ એજ રીતે રહે છે. તેથી ક્રમાનુસાર આ સઘળી સંખ્યાનો ન્યાસ આ પ્રમાણે છે–૫૩૭૪૯।૫૭/૬૨।૫૫/૬૨×૬૭ આ રીતે ત્રેપન હજાર સાતસો ઓગણપચાસ મુહૂર્ત તથા એક મુહૂર્તના બાસઠિયા સતાવન ભાગ તથા બાસઠિયા એક ભાગના સડસઠિયા પંચાવન ભાગ થાય છે. મૂળમાં કહ્યું પણ છે-(ता तेवण्ण मुहुत्तसहस्साइं सत्त य उणापण्णे मुहुत्तसए सत्तावण्णं बावट्ठिभागे मुहुत्तस्स बावट्ठिभागं च सत्तट्ठिहा छेत्ता

केवइएणं ते जुगप्पत्ते राइंदियग्गेणं आहिएत्ति वएज्जा' तावत् कियता खलु ते युगक्षेपो रात्रिन्दिवाग्रेण आख्यात इति वदेत् ॥–तावदिति पूर्ववत् कियता–किं प्रमाणेन खलु ते–त्वया भगवन् रात्रिन्दिवाग्रेण–रात्रिन्दिवपरिमाणेन 'जुगप्पत्ते' युगक्षेपः–योग्यविषयः अर्थात् तदेव नो युगं–परिपूर्णं युगं कियत्सु रात्रिन्दिवेषु प्रक्षिप्तेषु सत्सु तत् युगं परिपूर्णं भवतीति कथय भगवन्निति गौतमप्रश्नस्याशयः, ततो भगवानाह–'ता अट्ठतीसं राइंदियाइं दस य मुहुत्ता चत्तारि य बावट्ठिभागे मुहुत्तस्स बावट्ठिभागं च सत्तट्ठिहा छेत्ता दुवालसय-चुण्णियाभागा राइंदियग्गेणं आहिएत्ति वएज्जा' तावत् अष्टात्रिंशद् रात्रिन्दिवानि दश च मुहूर्त्ताः चत्वारो द्वाषष्टिभागा मुहूर्त्तस्य द्वाषष्टिभागं च सप्तषष्टिधा छित्वा द्वादश चूर्णिका-भागा रात्रिन्दिवाग्रेण आख्यातमिति वदेत् ॥–तावदिति पूर्ववत् तन्नोयुगं–परिपूर्णं युगं कियता रात्रिन्दिवाग्रेण प्रक्षिप्तेन परिपूर्णं भवतीत्युच्यते–तत्र खलु अष्टात्रिंशद्रात्रिन्दिवानि, दश च मुहूर्त्ताः, एकस्य च मुहूर्त्तस्य चत्वारो द्वाषष्टिभागाः, एकस्य च द्वाषष्टिभागस्य द्वादश

---

**त्तग्गेणं आहिएत्ति वएज्जा) इसीप्रकार होता है।**

**अब श्रीगौतमस्वामी युगक्षेप के परिमाण विषय में प्रश्न करते हैं–(ता केवइए णं ते जुगप्पत्ते राइंदियग्गेणं आहिएत्ति वएज्जा) हे भगवन् कितना परिमाण वाले अहोरात्र परिमाण से (जुगप्पत्ते) युगक्षेप–योग्य विषय अर्थात् वही परिपूर्ण युग कितने अहोरात्र प्रक्षिप्त करने से परिपूर्ण होता है? सो हे भगवन् आप कहिये। इसप्रकार श्रीगौतमस्वामी के प्रश्न को सुनकर उत्तर में श्रीभगवान् कहते हैं–(ता अट्ठतीसं राइंदियाइं दस य मुहुत्ता चत्तारि य बावट्ठिभागे मुहुत्तस्स बावट्ठिभागं च सत्तट्ठिहा छेत्ता दुवालस चुण्णियाभागा राइंदियग्गेणं आहिएत्ति वएज्जा) नो युग अर्थात् संपूर्ण युग कितने अहोरात्र प्रक्षिप्त करने से परिपूर्ण होता है? इसके लिये कहते हैं–वहां अडतीस अहो-रात्र दसमुहूर्त तथा एक मुहूर्त का बासठिया चार भाग एवं बासठिया एक**

---

पणपण्णं चुण्णियाभागा मुहुत्तग्गेणं आहिएत्ति वएज्जा) આજ પ્રમાણે થાય છે.

હવે શ્રી ગૌતમસ્વામી યુગક્ષેપના પરિમાણુના સંબંધમાં પ્રશ્ન પૂછે છે–(ता केवइएणं ते जुगपत्ते राइंदियग्गेणं आहिएत्ति वएज्जा) હે ભગવન્ કેટલા પરિમાણુવાળા અહોરાત્ર પરિમાણુથી (जुगपत्ते) યુગક્ષેપ યોગ્ય વિષય અર્થાત્ એ પરિપૂર્ણ યુગ કેટલા અહોરાત્ર પ્રક્ષેપ કરવાથી પરિપૂર્ણ થાય છે? તે હે ભગવન્ આપ કહો આ પ્રમાણે શ્રીગૌતમસ્વામી ના પૂછવાથી ઉત્તરમાંથી શ્રી ભગવાન્ કહે છે–(ता अट्ठतीसं राइंदियाइं दस य मुहुत्ता चत्तारिय बावट्ठिभागे मुहुत्तस्स बावट्ठिभागं च सत्तट्ठिहा छेत्ता दुवालसचुण्णियाभागा राइं-दियग्गेणं आहिएत्ति वएज्जा) નો યુગ અર્થાત્ સંપૂર્ણયુગ કેટલા અહોરાત્ર મેળવવાથી પરિપૂર્ણ થાય છે? તે માટે કહે છે. આડત્રીસ અહોરાત્ર દસ મુહૂર્ત તથા એક મુહૂર્તના બાસઠિયા ચાર ભાગ તથા બાસઠિયા એક ભાગના સડસઠિયા બાર ભાગ=૩૮।૧૦।$\frac{४}{६२}$$\frac{१२}{६७}$।

सप्तषष्टिभागाः–३८ । १० । $\frac{४}{६२}$ । $\frac{१२}{६२+६७}$ इत्येतावता सावयवेन रात्रिन्दिवपरिमाणेन प्रक्षिप्तेन युगप्राप्तमाख्यातमितिवदेत्–स्वशिष्येभ्यः प्रतिपादयेत् ॥ कथमेतावत्प्रक्षेप्यमितिचेत् उच्यते–सौरदिनपरिमाणेन मापितं तच्चोयुगं खलु त्रिंशदधिकान्यष्टादशशतानि १८३० भवन्ति । यतोहि एकस्य सौरवर्षस्य रात्रिन्दिवपरिमाणमत्रैवोक्तं भावितं च षट्षष्ट्यधिकानि त्रीणि शतानि–३६६ । परिपूर्णं युगं च एतादृशैः पञ्चभिर्वर्षैः प्रपूर्यते, तेनैतानि रात्रिन्दिवानि पञ्चभि गुण्यन्ते–३६६×५=१८३० जातानि अष्टादशशतानि त्रिंशदधिकानि रात्रिन्दिवानाम् ॥ पूर्वं चात्रैव नाक्षत्रादि पञ्चसंवत्सराणां योगस्तु–१७९१ । १९ । $\frac{५७}{६२}$ । $\frac{५५}{६२+६७}$ एकनवत्यधिकानि सप्तदशशतानि रात्रिन्दिवानाम्, एकोनविंशतिर्मुहूर्त्ताः एकस्य च मुहूर्त्तस्य सप्तपञ्चाशद् द्वाषष्टिभागाः, एकस्य च द्वाषष्टिभागस्य पञ्चपञ्चाशत्सप्तषष्टिभागाश्चेत्येतत्तुल्येन सावयवेन रात्रिन्दिवाग्रेण तच्चोयुगं परिपूर्णं सम्पद्यते ॥ अत एतावता सिद्ध्यति

---

भाग का सडसठिया बारह भाग–३८।१०।$\frac{४}{६२}$।$\frac{१२}{६२+६७}$ इतना सावयव अहोरात्र परिमाण प्रक्षिप्त करने से युगप्राप्त परिमाण आ जाता है ऐसा स्व शिष्यों को कहे । इसप्रकार इतना प्रक्षेप किस प्रकार से होता है? इसके लिये कहते हैं–सौर दिनके परिमाण से नापा हुवा वह नो युग अठारहसो तीस अहोरात्र वाला होता है १८३०। कारण की एक सौरसंवत्सर का अहोरात्र परिमाण इसी प्राभृत में कहा है वह तीनसौ छियासठ ३६६। अहोरात्र वाला सौर वर्ष प्रतिपादित किया है । संपूर्ण युग इसप्रकार के पांच वर्षों से पूर्ण होता है। अतः इन अहोरात्र को पांच से गुणा करे–३६६+५=१८३० तो अठारहसो तीस अहोरात्र होते हैं । पहले इसी सूत्र की व्याख्या में नाक्षत्रादि पांच संवत्सरों का योग–१७९१।१९।$\frac{५७}{६२}$।$\frac{५५}{६२+६७}$ सत्रहसो इक्काणवें अहोरात्र, उन्नीस मुहूर्त तथा एक मुहूर्त का बासठिया सतावन भाग तथा बासठिया एक भाग का सडसठिया पचपन भाग इतने परिमाण वाले सावयव रात्रिंदिवाग्र से

---

$\frac{૧૨}{૬૨\times૬૭}$ આટલા સાવયવ અહોરાત્ર પરિમાણ મેળવવાથી યુગ પ્રાપ્ત પરિમાણ મળી જાય છે. તેમ સ્વશિષ્યોને કહેવું, આટલો પ્રક્ષેપ કેવી રીતે થાય છે? તે માટે કહે છે–સૌર દિવસના પરિમાણથી માપેલ તે નો યુગ અઢારસો ત્રીસ અહોરાત્રનો થાય છે. ૧૮૩૦। કારણકે એક સૌરસંવત્સરનું અહોરાત્ર પરિમાણ આજ પ્રાભૃતમાં કહેલ છે. તે ત્રણસો છાસઠ ૩૬૬। અહોરાત્રવાળું સૌર વર્ષ પ્રતિપાદિત કરેલ છે. સંપૂર્ણ યુગ આ રીતના પાંચ વર્ષોથી પૂર્ણ થાય છે. તેથી આ અહોરાત્રનો પાંચથી ગુણાકાર કરવો ૩૬૬+૫=૧૮૩૦ તો આ રીતે અઢારસો ત્રીસ અહોરાત્ર થાય છે. પહેલાં આજ સૂત્રની વ્યાખ્યામાં નાક્ષત્રાદિ પાંચ સંવત્સરોનો યોગ ૧૭૯૧।૧૯।$\frac{૫૭}{૬૨}$।$\frac{૫૫}{૬૨+૬૭}$ સત્તરસો એકાણુ અહોરાત્ર ઓગણીસ મુહૂર્ત તથા એક મુહૂર્તના બાસઠિયા સત્તાવન ભાગ તથા બાસઠિયા એક ભાગના સડસઠિયા પંચાવન ભાગ આટલા પરિમાણવાળા સાવયવ રાત્રિદિવાગ્રથી તે નો યુગ પૂર્ણ થાય

यदनयोरेवान्तरं क्षेपः स्यात् । अतस्तथाकरणीयमिति क्रियते १८३०-(१७९.१ । १९ । ५७/६२ । ५५/६२×६७=३८ । १० । ४/६२ । १२/६२×६७ । अत्र यथास्थानक्रमेण शोधनक्रमोऽत्रैव पूर्वं बहुधा प्रतिपादितो भावितश्च, तेनात्र पुनः पिष्टपेषणं व्यर्थम् । तथैव यथास्थानक्रमेण शोधिते सति यथोक्ता अङ्काः समुत्पद्यन्ते । अतः प्रक्षेपविषयोऽयं यथावदुपपद्यते अष्टात्रिंशद्रात्रिन्दिवानि, दशमुहूर्त्ताः, एकस्य च मुहूर्त्तस्य चत्वारो द्वापष्टिभागाः, एकस्य च द्वापष्टिभागस्य द्वादश-सप्तषष्टिभागाश्चेत्येतावता रात्रिन्दिवाग्रेण प्रक्षेप्य इति ॥ अथास्यैव क्षेपस्य मुहूर्त्तपरिमाणं पिपृच्छुः प्रश्नसूत्रमाह–'ता से णं केवइए मुहुत्तग्गेणं आहिएत्ति वएज्जा' तावत् सः खलु कियता मुहूर्त्ताग्रेण आख्यात इति वदेत् ? ॥–तावदिति प्राग्वत् सः–पूर्वोक्तः क्षेपः खलु कियता मुहूर्त्ताग्रेण–मुहूर्त्तपरिमाणेन आख्यातः–प्रतिपादित इति वदेत्–कथय भगवन्निति गौतमस्य प्रश्नस्ततो भगवानाह–'ता एक्कारस पण्णासे मुहुत्तसए चत्तारि य बावट्ठिभागे

---

वह नो युग पूर्ण होता है । इससे वह सिद्ध होता है कि ये दोनों का अंतर क्षेप होता है । अतः वह किया जाता है–१८३०–(१७९।१।१९।५७/६२।५५/६२+६७=३८।१०। ४/६२।१२/६२+६७ यहां यथास्थान क्रमसे शोधन क्रम इसी प्राभृत में पहले अनेक बार प्रतिपादित किया है एवं भावित किया है । अतः यहां पर पुनः व्यर्थ पिष्ट-पेषण नहीं करतें । उसी प्रकार यथास्थान क्रम से शोधित करने से यथोक्त अंक आ जाता है । अतः यह प्रक्षेप विषय यथावत् हो जाता है । अडतीस अहोरात्र, दस मुहूर्त तथा एक मुहूर्त का बासठिया चार भाग एवं बासठिया एक भाग का सडसठिया बारहभाग इतने अहोरात्राग्र से प्रक्षेप्य होता है ।

अब उसी प्रक्षेप का मुहूर्त परिमाण पूछने के हेतु से प्रश्नसूत्र कहते हैं–(ता से णं केवइए मुहुत्तग्गेणं आहिएत्ति वएज्जा) वह पूर्वोक्त क्षेप कितने मुहूर्त परिमाण वाला प्रतिपादित किया है ? वह हे भगवन् आप कहिये ? इसप्रकार श्रीगौतमस्वामी के प्रश्न को सुनकर उत्तर में श्री भगवान् कहते हैं–(ता

---

છે. આથી એ સિદ્ધ થાય છે કે–આ બેઉનું અંતરક્ષેપ થાય છે. તેથી એ બતાવવામાં આવે છે–૧૮૩૦–(૧૭૯।૧।૧૯।૫૭/૬૨।૫૫/૬૨+૬૭।૩૮।૧૦ ૪/૬૨।૧૨/૬૨+૬૭ યથાસ્થાન ક્રમથી શોધન ક્રમ આજ પ્રાભૃતમાં પહેલા અનેકવાર પ્રતિપાદિત કરેલ છે અને ભાવિત કરેલ છે. તેથી અહીંયા ફરીથી વ્યર્થ પિષ્ટપેષણ કરતા નથી. એ રીતના યથાસ્થાન ક્રમથી શોધિત કરવાથી યથોક્ત અંક આવી જાય છે. તેથી સ્વપ્રક્ષેપ વિષય યથાવત્ થઈ જાય છે. આડત્રીસ અહોરાત્ર, દસ મુહૂર્ત તથા એક મુહૂર્તના બાસઠિયા ચાર ભાગ એવં બાસઠિયા એક ભાગના સડસઠિયા બાર ભાગ આટલા અહોરાત્રાગ્રથી પ્રક્ષેપ્ય થાય છે.

હવે આ પ્રક્ષેપનું મુહૂર્ત પરિમાણ પૂછવાના હેતુથી પ્રશ્ન સૂત્ર કહે છે–(ता सेणं केवइए मुहुत्तग्गेणं आहिएत्ति वएज्जा) એ પૂર્વોક્ત ક્ષેપ કેટલા મુહૂર્ત પરિમાણવાળું પ્રતિપાદિત કરેલ છે? તે હે ભગવન્ આપ કહો આ પ્રમાણે શ્રી ગૌતમસ્વામીના પ્રશ્નને સાંભળીને

मुहुत्तस्स बावट्ठिभागं च सत्तट्ठिहा छेत्ता दुवालस चुण्णिया भागा मुहुत्तग्गेणं आहिएत्ति वएज्जा' तावदेकादश पञ्चाशन्मुहूर्त्तशतानि चत्वारो द्वापष्टिभागा मुहूर्त्तस्य द्वापष्टिभागं च सप्तपष्टिधा छित्वा द्वादश चूर्णिकाभागा मुहूर्त्ताग्रेण आख्यात इति वदेत् ॥–तावदिति पूर्ववत् स च प्रक्षेपो मुहूर्त्तपरिमाणेनैतादृशो भवति–एकादश पञ्चाशन्मुहूर्त्तशतानि–पञ्चाशदधिकानि एकादशशतानि–११५० मुहूर्त्तानाम्, एकस्य च मुहूर्त्तस्य चत्वारो द्वापष्टिभागाः ४/६२ एकस्य च द्वापष्टिभागस्य द्वादश सप्तपष्टिभागाश्चेति ११५० । ४/६२ । १२/(६२×६७) मुहूर्त्ताग्रेण–सावयवमुहूर्त्तपरिमाणेन आख्यातः–प्रतिपादित इति वदेत्–स्वशिष्येभ्यः प्रतिपादयेत् ॥=अत्रोपपत्तिस्तु सुगमैव, यतोहि पूर्वमत्रैव यो रात्रिन्दिवात्मकः क्षेपः प्रतिपादितः सोपपत्तिकः साधितश्च, स एव मुहूर्त्तकरणार्थं त्रिंशता गुणनीयो मुहूर्त्तादिभिश्च योज्यस्तदा यथोक्तं मुहूर्त्तादि परिमाणं सिद्ध्येत्, यथात्र साधितो–रात्रिन्दिवात्मकः क्षेपः–३८ । १० । ४/६२ । १२/(६२×६७) अष्टात्रिंशद्रात्रिन्दिवानि, दशमुहूर्त्ताः, एकस्य च मुहूर्त्तस्य चत्वारो द्वापष्टिभागाः,

---

एक्कारसपण्णासे मुहुत्तसए चत्तारिय बावट्ठिभागे मुहुत्तस्स बावट्ठिभागं च सत्तट्ठिहा छेत्ता दुवालसचुण्णियाभागा मुहुत्तग्गेणं आहिएत्ति वएज्जा) वह प्रक्षेप मुहूर्त परिमाण से इसप्रकार का होता है–ग्यारहसो पचास मुहूर्त तथा एक मुहूर्त का बासठिया चार भाग ४/६२ तथा बासठिया एक भाग का सडसठिया बारहभाग ११५० ४/६२ १२/(६२+६७) सावयव इतने मुहूर्तपरिमाण से प्रतिपादित किया है ऐसा स्वशिष्यों को उपदेश करें। यहां पर उपपत्ति सुगमहीं है, कारण की पहले यहां पर ही रात्रि दिवस वाला जो क्षेप प्रतिपादित किया है, तथा उपपत्ति सहित सिद्ध किया है, उसको ही मुहूर्त करने के लिये तीस से गुणा करे तथा मुहूर्तादि के साथ योजित करे तो यथोक्त मुहूर्तपरिमाण सिद्ध हो जाता है। यहां पर साधित किया हुवा अहोरात्रवाला क्षेप–३८।१०। ४/६२। १२/(६२+६७) अडतीस रात्रि दिवस, दसमुहूर्त तथा एक मुहूर्त का बासठिया चार

---

ઉત્તરમાં શ્રી ભગવાન્ કહે છે–(ता एक्कारसपण्णासे मुहुत्तसए चत्तारिय बावट्ठिभागे मुहुत्तस्स बावट्ठिभागं च सत्तट्ठिहा छेत्ता दुवालस चुण्णियाभागा मुहुत्तग्गेणं आहिएत्ति वएज्जा) એ પ્રક્ષેપ મુહૂર્ત પરિમાણથી આ રીતે થાય છે.–અગીયારસો પચાસ મુહૂર્ત તથા એક મુહૂર્તના બાસઠિયા ચાર ભાગ ४/६२ તથા બાસઠિયા એક ભાગના સડસઠિયા બાર ભાગ ૧૧૫૦ ४/६२ १२/(६२+६७) સાવયવ આટલા મુહૂર્ત પરિમાણથી પ્રતિપાદિત કરેલ છે, એ પ્રમાણે સ્વશિષ્યોને ઉપદેશ કરવો, અહીંયાં ઉપપત્તિ સરળજ છે. કારણકે પહેલાં અહીંજ રાત્રિદિવસનો જે ક્ષેપ પ્રતિપાદિત કરેલ છે, તથા ઉપપત્તિ સહિત સિદ્ધ કરેલ છે. તેનોજ મુહૂર્ત કરવા માટે ત્રીસથી ગુણાકાર કરવો તથા મુહૂર્તાદિની સાથે તેને જોડવાથી યથોક્ત મુહૂર્ત પરિમાણ સિદ્ધ થઇ જાય છે. અહિં સિદ્ધ કરેલ અહોરાત્રવાળો ક્ષેપ=૩૮।૧૦। ४/६२। १२/(६२+६७) આડત્રીસ અહોરાત્ર, દસ મુહૂર્ત તથા એક મુહૂર્તના બાસઠિયા ચાર ભાગ તથા બાસઠિયા એક

एकस्य च द्वाषष्टिभागस्य द्वादश सप्तषष्टिभागा इति। अत्राष्टात्रिंशद्रात्रिन्दिवानि मुहूर्त्तकरणार्थं त्रिंशता गुण्यन्ते–३८×३०=११४० जातानि चत्वारिंशदधिकानि एकादशशतानि मुहूर्त्तानाम्। अत्र चाग्रस्थाः दशमुहूर्त्ताः प्रक्षिप्यन्ते–११४०+१०=११५० जातानि पञ्चाशदधिकानि एकादशशतानि मुहूर्त्तानाम्, अग्रेतनाश्च मुहूर्त्तादिभागास्तथैव स्थापनीया स्तथाकृते सति यथोक्तमुपपद्यते मुहूर्तपरिमाण मेकादशशतानि पञ्चाशदधिकानि मुहूर्त्ताना मेकस्य च मुहूर्त्तस्य चत्वारो द्वाषष्टिभागाः एकस्य च द्वाषष्टिभागस्य द्वादश सप्तषष्टिभागाः–११५०। $\frac{४}{६२}$। $\frac{१२}{६२\times६७}$ एतत्तुल्येन मुहूर्त्ताग्रेण क्षेपः–आख्यात इति वदेत् अर्थात् एतावति–मुहूर्त्तपरिमाणे प्रक्षिप्ते सति नो युग मुहूर्त्तपरिमाणं परिपूर्णयुगमुहूर्त्तपरिमाणं भवतीति भावार्थः॥–यथात्र नो युगमुहूर्त्तपरिमाणं पूर्वमुक्तम्–५३७४९। $\frac{५७}{६२}$। $\frac{५५}{६२\times६७}$ इदं मुहूर्त्तपरिमाणं च पूर्वं भावितमेव। तेनात्र यदि प्रागुक्तः क्षेपो योज्यते तदैवं

भाग तथा बासठिया एक भाग का सडसठिया बारह भाग होते हैं। यहां पर अडतीस अहोरात्र का मुहूर्त करने के लिये तीस से गुणा करे–३८+३०=११४० तो इसप्रकार ग्यारहसो चालीस मुहूर्त होते हैं, यहां पर पहले का दस मुहूर्त को जोडे तो ११४०+१०=११५०। ग्यारहसो पचास मुहूर्त होते हैं, तथा आगे का मुहूर्तादि भाग उसी प्रकार रक्खे ऐसा करे तो यथोक्त मुहूर्त परिमाण ग्यारहसो पचास मुहूर्त तथा एक मुहूर्त का बासठिया चार भाग तथा बासठिया एक भाग का सडसठिया बारह भाग–११५०।$\frac{४}{६२}$।$\frac{१२}{६२+६७}$ इतने मुहूर्ताग्र से क्षेप कहा है ऐसा स्व शिष्यों को उपदेश करें, अर्थात् इतना मुहूर्त परिमाण प्रक्षिप्त करे तो नो युग का मुहूर्तपरिमाण अर्थात् परिपूर्ण युग का मुहूर्तपरिमाण हो जाता है, जिस प्रकार यहां नो युग का मुहूर्त परिमाण पहले कहा है–५३७४९।$\frac{५७}{६२}$।$\frac{५५}{६२+६७}$ यह, मुहूर्तपरिमाण पहले भावित किया हि है। अतः यहां जो पहले कहा हुवा क्षेप योजित करे तो इसप्रकार से परिपूर्ण

ભાગના સડસઠિયા બાર ભાગ થાય છે. અહીં આડત્રીસ અહોરાત્રના મુહૂર્ત કરવા માટે તેને ત્રીસથી ગુણવા, ૩૮+૩૦=૧૧૪૦ જેથી આ રીતે અગીયારસોચાળીસ મુહૂર્ત થઈ જાય છે. તેમાં પહેલાના દસમુહૂર્ત મેળવવા જેથી ૧૧૪૦+૧૦=૧૧૫૦ અગીયારસોપચાસ મુહૂર્ત થઈ જાય છે. તથા આગળના મુહૂર્તાદિભાગને એજ રીતે રાખવા, આ પ્રમાણે કરવાથી યથોક્ત મુહૂર્તપરિમાણુ અગ્યારસો પચાસ મુહૂર્ત તથા એક મુહૂર્તના બાસઠિયા એક ભાગના સડસઠિયા બાર ભાગ ૧૧૫૦।$\frac{૪}{૬૨}$।$\frac{૧૨}{૬૨+૬૭}$ આટલા મુહૂર્તથી ક્ષેપ કહેલ છે. આ પ્રમાણે સ્વશિષ્યોને ઉપદેશ આપવો અર્થાત્ આટલા મુહૂર્ત પરિમાણનો પ્રક્ષેપ કરે તો નો યુગનું મુહૂર્ત પરિમાણુ અર્થાત્ પરિપૂર્ણ યુગનું મુહૂર્ત પરિમાણુ થઈ જાય છે. જે પ્રમાણે અહીં નો યુગનું મુહૂર્તપરિમાણુ પહેલાં કહ્યું છે જેમકે–૫૩૭૪૯।$\frac{૫૭}{૬૨}$।$\frac{૫૫}{૬૨+૬૭}$ આ મુહૂર્તપરિમાણુ પહેલાં ભાવિત કરેલજ છે. તેથી અહીં પહેલાં કહેલ ક્ષેપ જો યોજીત કરે

परिपूर्णसंवत्सरमुहूर्त्तपरिमाणं स्यात्–(५३७४९ । $\frac{५७}{६२}$ । $\frac{५५}{६२\times६७}$)+(११५० । $\frac{४}{६७}$ । $\frac{१२}{६२\times६७}$) ५४८९९+१=५४९०० अत्र पूर्णाङ्कानां प्रथमस्थानस्थितानां मुहूर्त्ताङ्कानां योगः चतुः पञ्चाशत्सहस्राणि अष्टौशतानि नवनवत्यधिकानि मुहूर्त्तानामिति ५४८९९ भवति, द्वितीय-तृतीयस्थानस्थितयो र्योज्ययोजकयो ($\frac{५७}{६२}$ । $\frac{५५}{६२\times६७}$)+($\frac{४}{६२}$ । $\frac{१२}{६७\times६७}$) रनयो र्यथाक्रमेण सजातीयाङ्कयोगनियमेन योगे कृते लब्ध एको मुहूर्त्तः, स च मुहूर्त्तयोगपरिमाणे प्रक्षेप्यः ५४८९९+१=५४९०० इति यथोक्तं युगपूर्णमुहूर्त्तपरिमाणमुपपद्यते–चतुः पञ्चाशत् सहस्राणि नव शतानि–नवशताधिकानि चतुःपञ्चाशत्सहस्राणि मुहूर्त्तानामिति परिपूर्णयुग-सत्कराविन्दिवानां त्रिंशदधिकाना मष्टादशशतसंख्यकानां मुहूर्त्तपरिमाणेन तुल्यमिति १८३०×३०=५४९०० इत्युपपद्यते ॥ अथ परिपूर्णयुगस्य सौरराविन्दिवपरिमाणं पृच्छति–'ता केवइयं जुगे राइंदियग्गेणं आहिएत्ति वएज्जा' तावत् कियद् युगं रात्रिन्दिवा-ग्रेण आख्यातमिति वदेत् ॥–तावदिति पूर्ववत् 'केवइयं' कियत्–कियत्प्रमाणं युगं–

संवत्सर का मुहूर्तपरिमाण होता है–(५३७४९। $\frac{५७}{६२}$। $\frac{५५}{६२+६७}$)+११५०। $\frac{४}{६७}$। $\frac{१२}{६२+६७}$= ५४८९९+१=५४९०० यहां पर प्रथम स्थान में रहा हुवा मुहूर्त का पूर्णांक चौपन हजार आठसो नन्नाणु मुहूर्त ५४८९९ होता है। दूसरे एवं तीसरे स्थान में रहा हुवा योज्य योजन का ($\frac{५७}{६२}$। $\frac{५५}{६२+६७}$)+($\frac{४}{६२}$। $\frac{१२}{६२+६७}$) इस संख्या का क्रमानुसार सजातीय अंक के योग का नियमानुसार योग करे तो एक मुहूर्त आता है। उसको मुहूर्त योग के साथ प्रक्षेप करे तो ५४८९९+१=५४९०० इसप्रकार यथोक्त युग का पूर्ण मुहूर्तपरिमाण चोपन हजार नवसो मुहूर्त हो जाता है। इसप्रकार परिपूर्ण युग के अठारहसो तीस अहोरात्र का मुहूर्त के तुल्य हो जाता है .१८३०+३०=५४९००

अब परिपूर्ण युग के सौर रात्रि दिवस के परिमाण विषय श्रीगौतम-स्वामी प्रश्न करते हैं–(ता केवइयं जुगे राइंदियग्गेणं आहिएत्ति वएज्जा) (ता

તો આ રીતે પરિપૂર્ણ સંવત્સરનું મુહૂર્તપરિમાણ થઈ જાય છે.=(૫૩૭૪૯।$\frac{૫૭}{૬૨}$।$\frac{૫૫}{૬૨+૬૭}$) +૧૧૫૦।$\frac{૪}{૬૭}$।$\frac{૧૨}{૬૨+૬૭}$=૫૪૮૯૯+૧=૫૪૯૦૦ અહીં પ્રથમ સ્થાનમાં રહેલ મુહૂર્તના પૂર્ણાંક ચોપન હજાર આઠસો નવ્વાણુ મુહૂર્ત ૫૪૮૯૯ થાય છે. બીજા અને ત્રીજા સ્થાનમાં રહેલ યોજય યોજકના ($\frac{૫૭}{૬૨}$।$\frac{૫૫}{૬૨+૬૭}$)+($\frac{૪}{૬૨}$।$\frac{૧૨}{૬૨+૬૭}$) આ સંખ્યાના ક્રમાનુસાર સજાતીય અંકના યોગના નિયમાનુસાર યોગ કરે તો એક મુહૂર્ત થાય છે. તેને મુહૂર્તની સંખ્યાની સાથે મેળવે તો ૫૪૮૯૯+૧=૫૪૯૦૦ આ રીતે યથોક્ત યુગનું મુહૂર્તપરિમાણ ચોપન હજાર નવસો મુહૂર્ત થઇ જાય છે. આ રીતે પરિપૂર્ણ યુગના અઢારસો ત્રીસ અહોરાત્ર મુહૂર્ત બરાબર થઈ જાય છે. ૧૮૩૦।૩૦=૫૪ ૯૦૦)

હવે પરિપૂર્ણ યુગના સૌર રાત્રિદિવસના પરિમાણ વિષયમાં શ્રી ગૌતમસ્વામી પ્રશ્ન પૂછે છે–(ता केवइयं जुगे राइंदियग्गेणं आहिएत्ति वएज्जा) તો કેટલા પ્રમાણવાળો

